# KAPYASAKOUMUDEE.

25

BY

Pandit Ramasastri



EDITED
BY

Pandit Sankarasubrahmanya Sastry,
St. Joseph's High School,
TRIVANDRUM.



PRINTED AT THE
"BHASKARA" PRESS,
TRIVANDRUM.
1925.

॥ श्रीः ॥

# कप्यासकौमुदी ।

शालिवाटीनगरान्तर्गत

हरिकेशवपुराभिजनेन

पण्डित रामशास्त्रिणा

विरचिता ।



अनन्तशयनस्थ सेञ्जोसफस्

विद्याशाला संस्कृताध्यापकेन पण्डित,

शङ्करसुब्रह्मण्यशास्त्रिणा

परिशोधिता ।

---

अनन्तशयनस्थ

"भास्कर" मुद्रालये मुद्रिता ।

1925.

॥ श्रीः ॥

छान्दोग्योपनिषद्गतस्य स[illegible]-
मालोचनां कुर्वतः
कप्यासस्य पदस्य जल्पितचयं
रामानुजीयादिभिः ।
येऽर्थास्तान्प्रबलप्रमाणवचनै-
राखण्डयन्मण्डय-
न्नाचार्याभिहितं ह्यभिज्ञजनता-
मोदाय भूयादयम् ॥

शङ्करसुब्रह्मण्यशास्त्री.
अनन्तशयनस्थ सेक्रोसफ्स् विद्याशाला
संस्कृतपण्डितः ।

1 श्रीशङ्करभगवत्पादाचार्योक्तमर्थम् ।

2 अयं ग्रन्थः ।

ओम् तत्सत्

श्री गुरुभ्यो नमः ।

॥ श्रीः ॥

नमो भगवते

मेधादक्षिणामूर्तये परब्रह्मणे ॥

# कप्यासकौमुदी ।

कप्यासशब्दार्थविचाररूपा ।

---

योऽन्तर्दिनकृति दीव्यति

दुरितसुदूरो हिरण्मयो देवः ।

तमुदाख्य ध्यायाम

कप्यासनलिनकञ्जसमनयनम् ॥

छान्दोग्योपनिषदि श्रूयते—"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इति ।

अस्याः श्रुतेरयमर्थः । अथ उपासनान्तरमुच्यते । अन्तरादित्ये आदित्यमण्डलस्यान्तः । अनेनोपासनास्थलमुक्तम् । य एष

इति उपास्यः परमेश्वर उक्तः । यदेतच्छब्दाभ्यां परोक्षापरोक्षवाचकाभ्याम् उपास्यस्य शास्त्रप्रसिद्धिर्लोकप्रसिद्धिश्च दर्शिता । दृश्यते इति प्रत्यक्षकल्पानुवादेन उपासकेभ्यो दर्शनविषयत्वसम्भावना च दर्शिता ।

उपास्यमुक्त्वा तत्स्वरूपं विशिनष्टि हिरण्मय इत्यादिना । हिरण्मय इव हिरण्मय इति लुप्तोपमा । ज्योतिर्मय इत्यर्थः । आनखशिखं ज्योतिर्मयतामाह आप्रणखात्सर्व एव सुवर्ण इति हिरण्यश्मश्रुर्हिरण्यकेश इति च । प्रणखं प्रपदमितिवत् नखाग्रमिति यावत् । ध्याने पादादारभ्य मुखे विशिष्य धारणायाः शास्त्रप्रसिद्धत्वेन मुखे विशेषमाह— तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी इति ।

कप्यासमिति लुप्तोपमा । तस्य पुण्डरीके अन्वयः । कपेर्मर्कटस्य आसः उपवेशनसाधनं पृष्ठदेशः । करणे घञ् । तत्सदृशमारक्तं पुण्डरीकमिति । "घञजराः पुंसि" इत्यस्य प्रायिकत्वादासे क्लीबत्वम् । यथा कपिपृष्ठसदृशं पुण्डरीकमारक्तमेवमन्तरादित्ये ध्येयस्य परमेश्वरस्याक्षिणी लोचने इति यावत् । उपमाया यथा एवमिति वाक्यगतत्वान्न वचनविरोधो दोषः । "प्राणा इव सुहृन्मम" इत्यादौ वचनविरोधेऽपि उपमायास्साधुत्वदर्शनाच्च ।

तस्य नामाह—'उदिति' । तन्निर्वक्ति स एष सर्वेभ्यः पाप्मभ्य उदित इति ।

उपासनं सम्पूर्णमुक्त्वा तत्फलमाह उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद इति। वेद उपास्ते। उपासनाप्रकरणादुपास्यस्य सगुणत्वाद्ध्येयत्वे ध्येयप्रकरणगतज्ञानार्थानामुपासनार्थत्वनियमाच्च इति। एतच्छ्रुत्यर्थ एव श्लोके संगृहीत।

तथा हि—अन्तर्दिनकृतीति अन्तरादित्य इत्यस्य, यो दीप्यतीति प्रसिद्धवन्निर्देशेन य एष इति शास्त्रलोकप्रसिद्धिबोधकस्य, दुरितसुदूर इति स एष सर्वेभ्यः पाप्मभ्य उदित इत्यस्य, हिरण्मय इति आप्रणखादित्यादेः, उदाख्यामिति तस्योदिति नाम इत्यादेः, ध्यायाम इति च अथेति प्राकरणिकस्य वेद इति श्रौतस्य उपासनाविधेः, कप्यासनकमनमित्यादिना च तस्य यथा कप्यासमित्यादेर्बोधः। फलं त्वत्र तत्क्रतुन्यायात्सुगममिति पृथङ्नोक्तम्।

अपि च, कर्मन्यायादुपासनस्यापि शेषफलाभिसन्धिमन्तरेवानुष्ठाने चित्तस्य सूक्ष्मवस्तुग्रहणशक्तिसम्पादनेन निर्गुणब्रह्मसाक्षात्कारसम्पादकत्वसम्भवात्तस्यैव परमपुरुषार्थत्वाच्च श्लोके फलानुक्तिः। तदुक्तम्—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत्पुंसामपेतोपाधिकल्पनम्॥" इति।

ननु भोः समीचीनमिव सर्वम्। कप्यासे तु स्खलितोऽसि। कुतो न्वहमस्खलमङ्ग! उच्यते। कप्यासशब्दस्य हि वृत्तिकृता

बह्वोऽर्था वर्णिताः। तेषु चारूनर्थान्विहाय यत्कपिपृष्ठपरतया वर्णनमिदमेव स्खालित्यम्। अस्यार्थस्य हीनोपमादिदोषदूषितत्वादिति।

अत्रेदं विचारणीयम्। यद्यपि वृत्तिकृतात्र षड्वा बह्वो वाऽर्था वर्णिताः, तथापि तेषु केषांचिद्दोषस्य सर्वसम्मतत्वाच्चत्वार एवाऽर्था इह विचारणापदवीमारोप्यन्ते। ते चैते—कपिर्वानरः रूढेः प्रसिद्धेश्च। तस्य आसः आस्तेः करणघञ् उपवेशनसाधनं पृष्ठभागः। तेन ह्युपविशतीति भाष्यात्। ततो लुप्तोपमया वानरपृष्ठवदारक्तं यत्पुण्डरीकं तत्सदृशे अक्षिणी इत्येकोऽर्थः। अयमेवाऽर्थः अस्मदभिमतः श्लोके निबद्धः।

द्वितीयस्तु कं जलम्। "पुंसि कः कं शिरोऽम्बुनोः" इति निघण्टुदर्शनात्। कमित्यकारान्तम। तत्पातीति कपिः सूर्यः कमलनालं वा। तेन तत्र वा आस्यते विकस्यते आस्ते वर्तते वा इति कप्यासम। रविकरविकसितं नालयुक्तमिति वा तदर्थ इति।

अथ वा के जले प्यास्त इति प्यासम्, अपिपूर्वकास्तेर्भागुरिमतेन पिधानादाविवाऽल्लोपे रूपम्। जलोपरि स्थितमिति यावत।

अथवा चतुर्थोऽर्थः, के जले प्यायते वर्धत इति कप्यम्। प्यायतेः कप्रत्यय आतो लोपश्च आस्यते विकस्यत इत्यासम्। आस्यतेः कर्मणि घञ्। कप्यं च तदासं चेति पाचकपाठकादिव द्वैवक्षिको विशेषणसमास। जलपरिपुष्टं विकसितं च यत्पुण्डरीकं तद्वदक्षिणी इतीति।

तत्र द्वितीये तृतीये चतुर्थे च बहवो दोषा इति प्रथम एवार्थ इह स्वीक्रियते। तथाहि—द्वितीये तावत्क-शब्दस्याऽकारान्तस्य जलवाचित्वेऽपि तदुपरि पाधातोः कथं व्यु-त्पत्तिः। आतोऽनुपसर्गे क इति (३ अ० २ पा० ३. तम.) सूत्रेण कप्रत्यये द्विपपादपादिवत्कप इत्येव रूपं स्यात्। पातेः कि-प्रत्यये तु किद्रे च इति (४३९ उ० व्या–म्) किप्रत्ययसन्नियोग-शिष्टद्वित्वस्यापि प्राप्तौ पपीरितिवत्कपपीरिति स्यान्न तु कपिरिति। तथा च कपिशब्दे व्याकरणविरोधादसाधुत्वमेको दोषः। "शब्द-स्मृतिविरुद्धमसाधु" इति (अलं १. अध्या० २. अधि० ९.) वा-मनसूत्रम्। अयमेव दोषश्च्युतसंस्कृतिरिति व्यपदिश्यते अन्यत्र। पानार्थस्य पाधातोः शोषणवृद्ध्योर्लाक्षणिकत्वेनाऽन्यार्थत्वादिदोषाः स्युः। सूर्ये नाले वा मुख्यपानासम्भवात्। तथा कपिशब्दस्य वानर रूढेः, तत्परित्यागेन क्लिष्टयोगकल्पनाच्च अन्यार्थनेयार्था-दिदोषाश्च। "रूढिच्युतमन्यार्थम्" इति "कल्पितार्थं नेयार्थम्" इति च तल्लक्षणात्। (अलं १. अध्या० २. अधि० ११–१२. सु०)।

एवमस्यतेर्विकसनार्थत्वेऽपि त एव दोषाः। क्षेपणविकस-नयोर्भेदात्। कपिशब्दे आसशब्दे च लक्षणात्यन्तप्रसरात्सर्वलाक्ष-णिकत्वाच्च सहृदयानां महद्वैरस्यमापतति। वामनेतरेषां तु अवा-चकत्वासमर्थत्वक्लिष्टत्वादयो बहवो दोषाः प्रादुःष्युः। तल्लक्षणत-त्समन्वयादि तु सचेतसां सुगममित्युपेक्ष्यते क्षुद्रपराङ्मुखैरस्माभिः।

आस्तेर्घञा नाले वर्तेत इत्यर्थे तु "अकर्तरि च कारके संज्ञाया" मिति (व्या० १. अ० ३. पा० सू० १९.) घञ्विधायके सूत्रे अकर्तरि इति कर्त्रर्थे तत्पर्युदासादसाधुत्वं पुनर्दोषः। तथा सनालमिति विशेषणस्यापुष्टार्थत्वमपरो दोषः—"अपुष्टार्थं विशेष्ये चेन्न विशेषो विशेषणात्" इति तल्लक्षणात्। नालयुक्तमित्यर्थस्य व्यावर्तकतया वा गुणाधायकतया वा प्रकृतेऽनुपयोगात्।

तृतीयपक्षेऽपि प्यासशब्दे पूर्वोक्तदोषतादवस्थ्यमेव। तदिदं प्रयुक्तेषु (अलं० सू० २. अ० २. अधि० १९) इति न्यायेन अपेरल्लोपस्य अप्युपसर्गस्य तदुपसृष्टस्यास्तेस्तथा उपवेशनार्थस्य तस्य उपरिस्थितिमात्रार्थत्वस्य च च्युतसंस्कृतिनिरर्थकाप्रयुक्तनेयार्थगूढार्थत्वादिदोषाधायकत्वात्। "निरर्थकं तुहीत्यादिपूरणैकप्रयोजनम्।" इति निरर्थकलक्षणम्। अपेस्तथात्वात्। अप्रसिद्धार्थप्रयुक्तं गूढार्थम् (अलं० १. अ० २. अधि० १३. सू० ) इति गूढार्थलक्षणम्। दोषान्तरलक्षणानि तु पूर्वमुक्तान्येव।

चतुर्थस्त्वर्थः, प्यायतेः क्लिष्टकल्पनया अपुष्टार्थतया अस्यतेः क्षेपणार्थस्य विकसनार्थे लाक्षणिकत्वेन नेयार्थतादिदोषात्, अस्यतेः कर्मणि घञि केनेति करणाकाङ्क्षाया अशान्तेः कर्त्रर्थत्वे च असमर्थत्वासाधुत्वादिदोषतादवस्थ्याच्च न चारुः।

तथा च प्रथमपक्षे कपिशब्दस्य वानरे रूढत्वात् आसेरुप-

वेशनार्थस्यैव करणे घञि साधुत्वात्स एव श्रीमच्छङ्करभगवत्पाद-सम्मतः साधुरिति च किमिह स्खालित्यमिति ।

अत्र रामानुजीयाः— कं पातीति व्युत्पत्तौ दोषेऽपि वानरपर-कपिशब्दवत्कम्पेः किप्रत्यये योगशक्तेः कपिशब्दः सूर्यपरः । न च कपिशब्दस्य सूर्ये प्रयोगाभावेन तत्र शक्तिर्नास्तीति वाच्यम् । "कपि-र्बभस्ति तेजनम्" इत्यत्र सूर्येऽपि कपिशब्दप्रयोगदर्शनादिति वदन्ति -

तदिदमविचारितरमणीयम् । कम्पेः कपिशब्दस्य सूर्ये शक्ति-ग्राहकप्रमाणाभावात् । न च कपिर्बभस्तीति पूर्वोक्तश्रुतिः प्रमाणमिति वाच्यम् । श्रुतेर्लोकनिघण्ट्वादिसिद्धशक्तिमुपजीव्यैवार्थबोधकत्वेन सा-क्षाच्छक्तिग्राहकत्वाभावात् , "शक्तिग्रहं व्याकरणोपमाने"त्यादिश-क्तिग्राहककोटौ श्रुतेरपरिगणनाच्च । स्पष्टं चेदं पूर्वतन्त्रे प्रमाणलक्षणे यववराहादिपदेषु विस्पष्टवाक्यशेषस्य सन्दिग्धशक्तिनिर्णायकत्वमपि आर्यप्रसिद्धेरुपोद्बलकतया आर्यप्रसिद्धिसिद्धशक्त्यन्तरनिर्णायकत्वेनैव । न तु साक्षात्पृथक्छक्तिग्राहकत्वेन ।

वस्तुतस्तु कपिर्बभस्ति तेजनमिति श्रुतावपि कपिर्न सूर्यः । किन्त्वन्य एव । शान्तिहोममन्त्रे हि "नहि ते अग्ने तनुवै क्रूरं चकार मर्त्यः । कपिर्बभस्ति तेजनं पुनर्जरायु गौरिव । अपनश्शोशुचद-घम् ।" इति श्रूयते । अत्र पूर्ववाक्ये मर्त्यशब्दसामानाधिकरण्यात् कपिरिव कपिः चञ्चलस्वभावो मर्त्यः । बभस्ति दीपयतीति हि तत्रार्थः । स्पष्टं चेदं वेदभाष्ये । तथा च तत्रापि रूढ्याद्यानुगुण्येन

वानर एवार्थः । गौण्या तु वृत्त्या मर्त्यमभिधत्ते । ततश्च सर्वथा कपिर्वानर एव मुख्य इति प्रथमपक्ष एव साधुः । तथात्वेपि पूर्वोक्ता अन्यार्थादिदोषास्तदवस्थाश्चेति किमनेन क्लेशनेति ।

ननु तव मतेऽपि कपिशब्दे आसशब्दे च दोषाभावेऽपि कप्यासशब्दस्य पुण्डरीकवत्पृथगक्ष्युपमानत्वे सादृश्यलक्षणया पुण्डरीकविशेषणत्वे वा अपुष्टार्थत्वादिदोषाः हीनोपमादिदोषाश्च स्युरेव । आद्ये कप्यासे पृथगुपमानत्वमक्ष्णोरनुपयुक्तं पृथगुपमानवाचकेवाद्यभावात् यथाशब्दावृत्तौ क्लिष्टं च । एकस्योपमानद्वयकल्पनेन वैरस्यावहं च । द्वितीये सादृश्यलक्षणाकल्पनं; हीनोपमाश्लीलत्वादि च पक्षयोरुभयोरपि सममिति चेत् तदिदं बालसंमोहनमात्रम् ।

द्वितीयपक्षे सादृश्यलक्षणाया रूढिमूलकत्वेनादोषात् । अत एवोद्गातृशब्दे रूढिमूला लक्षणैव योगादुत्कृष्टेति शेषलक्षणे स्थितम् । अन्यथा तत्रापि अपसुब्रह्मण्यस्योद्गातृगणस्य योगादेव ग्रहणसिद्धौ लक्षणोक्तिः कदर्थिता स्यात् । अत एव चाऽऽकाशवैश्वानरादिशब्दानां योगाद्रूढिर्बलीयसीति न्यायमाश्रित्य आकाशादिशरीरकपरमात्मपरत्वमुक्तं रामानुजाचार्यैरपि न तु योगात्तत्परत्वमुक्तम् ।

किञ्च भाविलक्षणायाः शङ्कया कपिशब्दे योगकल्पनमपि न युक्तम् । असञ्जातविरोधन्यायविरोधात् । अत एव रथकाराधिकरणे भावि "न स्त्रीशूद्रौ वेदमधीयाता"मिति निषेधशङ्कया न तावद्रथकारशब्दे योग आश्रितः । न हि प्रपौत्रः सर्वस्वं व्यययिष्यतीति न कोऽपि धनमार्जयति न वर्धयति वा । अत एवाऽत्रापि

रूढिपक्ष एवाश्रितः कपिशब्दे। तदुत्तरभाविनी च सादृश्यलक्षणा, वाक्यसङ्कटकभूतेति न दोषायेति। पुण्डरीकवत्पृथगुपमानान्तरत्व-पक्षस्त्वनभ्युपगमपराहत एव। यदपि हीनोपमादिदोष उद्भावित-स्तदपि तथा।

यद्यपि "काव्यशोभायाः कर्तारो गुणाः तद्विपर्यया-त्मानो दोषाः" इति च वामनादिमते दोषाणां गुणाभावरूपत्वे वा मतान्तरे तेषां काव्यगतचारुत्वप्रतिबन्धकत्वेन जात्यन्तरत्वे वा काव्य-गतत्वेन काव्येष्वेव एतादृशदोषपरिशीलनम्। अत एव देवतार्षे क्वचिद्वेदे "श्वान इवायात देवाः" इत्यादिकं श्रूयते। तथापि वेदे पदार्थसन्देहे शास्त्रान्तरन्याय इवालङ्कारिकन्यायोऽपि निर्णायकी-भवन्न निवार्यत इति तेपि दोषा अत्र चिन्त्या एव। तथा चात्र हीनोपमादोषः परिहरणीय एवेति चेत्, नाऽत्र कथमपि हीनोपमा-दोषः "हीनं यत्रोपमानं स्यात्तद्धि हीनोपमं मतम्" इति तल्लक्षणे उपमानादिशब्दानां ससम्बन्धिकशब्दत्वेन यन्निष्ठोपमेयतानिरूपि-तोपमानत्वाश्रये हीनत्वं तत्त्वमित्यर्थात्साक्षात्तदुपमानहीनत्व एव तद्दोषप्रसरात्। यथा—"चण्डालैरिव युष्माभिः साहसं परमं कृतम्" इत्यादौ।

अत्र च भगवदक्ष्णोः पुण्डरीकमेवोपमानं न तु कप्या-सम्। यस्य तु तदुपमानं न तत्पुण्डरीकाऽपेक्षया हीनमिति कुत्र हीनोपमा। तदुक्तं शङ्करभगवत्पादाचार्यैः—"उपमानोपमा-नत्वान्न हीनोपमा" इति। अत एवं श्रुतप्रकाशिकाकृतोपि

कप्यासशब्दस्य पुण्डरीकवत्साक्षादक्ष्युपमानत्वपक्षे एव हीनोपमा-दोष उद्भावितः। न त्वस्मिन्पक्षेऽपि।

वस्तुतस्तु नाऽत्र हीनोपमादोषप्रसक्तिरपि। सा हि त्रिधा विभेदिता। तथा च वामनसूत्रम्। "जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वं" इति (अलं २. अ. ४. अधि. ९. सू.)। जात्या यथा—"चण्डालैरिव युष्माभिस्साहसं परमं कृतम्" इति। प्रमाणतो यथा—"वह्निस्फुलिङ्ग इव भानुरयं चकास्ति" इति च। तथा च प्रकृते कप्यासे जात्या वा हीनत्वं प्रमाणतो वेति वक्तव्यम्। न जात्या हीनत्वमत्र चण्डालत्वादिवदवयवेषु जात्यनङ्गीकारेण कपिपृष्ठे जात्या हीनत्वाऽभावात्। प्रमाणतोऽपि न तत्। पुण्डरीकात्कपिपृष्ठस्य भानोरग्निकणस्येव विषमपरिमाणत्वाभावात्। यापि तृतीया धर्महीनरूपा तस्या उपमानोपमेययोरुपमानिर्वाहकाऽनुगतधर्महीनतारूपत्वादत्राऽनवकाश एव। एवं च प्रकृते हीनोपमादोषकथनमुत्स्वप्नायितमेव दुराग्रहिणाम्।

स्यादेतत्। पुण्डरीकशब्दस्य "पुण्डरीकं सिताम्भोज"मिति कोशात् सिताऽम्भोजपरत्वेन तत्र रक्ततातात्पर्यककप्यासपदस्य कथमन्वयः सितत्वरक्तत्वयोर्विरोधेन वाक्यस्यैव "वह्निना सिञ्चती" तिवद्बाधितत्वापत्तेरिति। इदमपि व्यामोहनमात्रम्। यद्यपि "पुण्डरीकं सिताम्भोज"मिति कोशस्तथापि तस्य भूयःप्रयोगादिभिस्सरोजसामान्ये सङ्कोच एव। अन्यथा "पुण्डरीकाक्ष" इत्यादौ कमले सितत्वस्यापि प्रतीतावसभ्यार्थतापत्तेः।

किञ्च पूर्वतन्त्रे "मौद्गं चरुं निर्वपेच्छ्रीकामः" इति विकृतिविशेषे "पौण्डरीकाणि बर्हींषि भवन्ती"त्यौपदेशिकेन पौण्डरीकबर्हिष्ट्वेनाऽऽतिदेशिकदर्भाणां बाधे "दर्भैस्स्तृणीत हरितैरिति मन्त्रस्थे- दर्भैरिति हरितैरिति च पदे त्यक्त्वा पुण्डरीकैस्स्तृणीत रक्तैरित्यूहितव्यमिति सिद्धान्तितं बाधलक्षणे ।

यदि पुण्डरीकपदे सितत्वमपि शक्यतावच्छेदकं स्यात्तदा रक्तपदोहोक्तिरनुपपन्ना स्यात् । एवं "आकाशवापीसितपुण्डरीक"मिति काव्ये पुण्डरीके सितत्वविशेषणमप्यनुपपन्नं स्यात् । तथा च पुण्डरीकपदस्य सितरक्तसाधारण्येनाम्भोजमात्रे शक्तिरित्यवश्यमभ्युपेयमकामेनापि ।

तथा च प्रकृते क्व बाधः । अस्तु वा कोशप्रामाण्यात्सितत्वमपि शक्यतावच्छेदकम् । तथापि तदंशव्यावर्तनार्थं कप्यासपदस्य आरक्ततातात्पर्यकत्ववर्णनमावश्यकम् । न चाऽर्थबाधादयोग्यतया शाब्दबोधो न स्यादिति वाच्यम् । "आकाशपङ्कजं" "भुजभूरुहः" इत्यादि योगरूढस्थले समभिव्याहारविशेषवशेन पङ्कजनिकर्तृत्वभूरोहकर्तृत्वादियोगार्थस्येव शक्यैकदेशसितत्वांशस्यापि प्रकृते त्यागस्य व्युत्पत्तिसिद्धत्वेनाऽदोषाच्छाब्दबोधोपपत्तेः ।

एवं च कमलसामान्यविशेषकतया "सुप्तमीन इव ह्रद" इत्यत्र सुप्तमीनत्ववदौपम्यपरिपोषकत्वेन आरक्ततातात्पर्यकं कप्या-

सपदं प्रत्युत परिकरविधया गुणावहमपि भवतीति शाङ्करी रीतिरेव समीचीना। अयमेवार्थः "य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य मध्यात्समावृषभो रोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनातु" इति श्रुतावपि रोहिताक्ष इति पदेन समर्थितः।

यदप्यश्लीलत्वं वा दोष इति, तदपि व्यामोहमात्रम्। व्रीडा-जुगुप्सामङ्गलातङ्कदायित्वेन (त्रिधा) भिन्नस्यापि तस्याऽत्र कथमप्य-प्रसरात्। तिर्यक्पृष्ठभागस्य वैदिकजनमात्रे व्रीडाया जुगुप्साया वा अनाधायकत्वात्।

यत्त्विह साटोपं रामानुजीयं वचनमुपन्यस्तं "गम्भीराम्भ-स्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलायताक्ष" इत्यर्थ इति तत्रेदमालोच्यते। सकृच्छ्रुतस्य हि कप्यासपदस्य कथं भिन्नभिन्न-व्युत्पत्तिभिः भिन्नभिन्नार्थकत्वम्। "सकृदुच्चरितश्शब्दः सकृदेवार्थं गमयती"ति व्युत्पत्तेः। तथा च कप्यासपदे रविकरविकसितमिति वा सुमृष्टनालमिति वा जलचलमिति वा कश्चिदेवार्थः सकृद्बोध-विषयः स्यान्नतु त्रयोऽप्यर्थाः सकृत्समप्राधान्येनैकस्मिन्विशेष्ये विशे-षणतया। "श्वेतो धावती"त्यादिश्लेषस्थलेऽपि ग्रहीतृभेदात्प्रकरणभे-दाद्वा इतः श्वा धावतीति श्वेतवर्णो धावतीति वा प्रतीतिर्न तु श्वेतवर्णः श्वा इतो धावतीत्येककालमेकरूपा प्रतीतिः।

न च "येन ध्वस्तमनोभवेने"त्यादौ शिवविष्णुरूपस्यार्थद्वय-स्वयोऽत्राऽपि बह्वर्थप्रतीतिरिति वाच्यम्। "प्रत्यर्थं शब्दाभिनिवेश"इति

महाभाष्यादर्थभेदे शब्दभेदस्याऽऽवश्यकत्वादावृत्त्यैवार्थान्तरप्रतीतेः समर्थनीयत्वादावृत्तौ च क्वचित्क्रियान्तरादेः "अक्षा भज्यन्तां भुज्यन्तां दीव्यन्ता"मित्यादौ, क्वचिदुपमादिकल्पनादेः "सकलकलं पुरमेतत्", "जलदभुजग", इत्यादौ, क्वचिच्च विरोधद्योतकचकारादेः "शनिरशनिश्च", "विनापि तन्वि हारेण", "स्वतनोरपश्यदधिकाम्", इत्यादौ च गमकत्वात्। तदभावे च "येन ध्वस्तमनोभवेने"त्यादावपि प्राकरणिकस्यैकतरार्थस्यैव प्रतीतिस्स्यान्न तु द्वयोर्बहूनां वेत्याऽलङ्कारिकसिद्धान्तात्।

स्पष्टं चेदं व्यक्तिविवेकादौ, तथा च कप्यासपदेऽपि एकतरार्थबोधेनैवाऽऽकाङ्क्षायाः शान्तेः पुनराकाङ्क्षोत्थापकप्रबलप्रमाणाभावेनाऽऽवृत्त्यनुदयान्न द्वयोस्त्रयाणां वाऽर्थानां त्वदुक्तरीत्या प्रतीतिर्भागिनी व्युत्पन्ना वेति सुधीभिर्विभावनीयम्। एवं चाऽर्थान्तरपरत्वे भूयोदोषतया कपिपृष्ठवदारक्तं यत्पुण्डरीकं तत्सदृशे अक्षिणी यस्य परमेश्वरस्य तं ध्यायाम इत्येवाऽर्थः समीचीनतर इति सर्वं सुस्थमिति।

एवं कयाऽपि विधया मयाऽपि दैवात्स्मृतः परः पुरुषः।
आदित्यमण्डलगतः स विधूयाऽघं शुभां स्मृतिं दद्यात्॥

इति, पण्डित. सु. रामशास्त्रिणाम्

कृतिषु कप्यासकौमुदी

समाप्ता।

---